श्रीमत्पिङ्गलाचार्यविरचितम्

# छन्दःशास्त्रम्

## प्रथमोऽध्यायः ।

धीश्रीस्त्रीम् १ वरा सा य् २ का गुहा र् ३ वसुधा स् ४ सा ते क्व त् ५ कदा स ज् ६ किं वद भ् ७ न हस न् ८ गृ ल् ९ गन्ते १० ध्रादिपरः ११ हे १२ लौ सः १३ ग्लौ १४ अष्टौ वसव इति १५

इति प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

छन्दः १ गायत्री २ दैव्येकम् ३ आसुरी पञ्चदश ४ प्राजापत्याष्टौ ५ यजुषां षट् ६ साम्नां द्विः ७ ऋचां त्रिः ८ द्वौ द्वौ साम्नां वर्धेत ९ त्रींस्त्रीनृचाम् १० चतुरश्चतुरः प्राजापत्यायाः ११ एकैकं शेषे १२ जह्यादासुरी १३ तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः १४ तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्मयः १५ प्रग्यजुषामार्ष्य इति १६

इति द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

पादः १ इयादिपूरणः २ गायत्र्या वसवः ३ जगत्या आदित्याः ४ विराजो दिशः ५ त्रिष्टुभो रुद्राः ६ एकद्वित्रिचतुष्पादुक्तपादम् ७ आद्यं चतुष्पादृतुभिः ८ क्वचित्त्रिपादृषिभिः ९ सा पादनिचृत् १० षट्कसप्तकयोर्मध्येऽष्टा-वतिपादनिचृत् ११ द्वौ नवकौ षट्कश्च नागी १२ विपरीता वाराही १३ षट्कसप्तकाष्ठकैर्वर्धमाना १४ विपरीता प्रतिष्ठा १५ तृतीयं द्विपाज्जागतगा-यत्राभ्याम् १६ त्रिपात्त्रैष्टुभैः १७ उष्णिग्गायत्रौ जागतश्च १८ ककुम्मध्ये चेदन्त्यः १९ पुर उष्णिक्पुरतः २० परोष्णिक्परतः २१ चतुष्पादृषिभिः २२ अनु-ष्टुब्गायत्रैः २३ त्रिपात्क्वचिज्जागताभ्यां च २४ मध्येऽन्ते च २५ बृहती जागतस्त्रयश्च गायत्राः २६ पथ्या पूर्वश्चेत्तृतीयः २७ न्यङ्कुसारिणी द्वितीयः २८ स्कन्धोग्रीवी क्रौष्टुकेः २९ उरोबृहती यास्कस्य ३० उपरिष्टाद्बृहत्यन्ते ३१ पुरस्ताद्बृहती पुरः ३२ क्वचिन्नवकाश्चत्वारः ३३ वैराजौ गायत्रौ च ३४

त्रिभिर्जागतैर्महाबृहती ३५ सतोबृहती ताण्डिनः ३६ पङ्क्तिर्जागतौ गायत्रौ च ३७ पूर्वौ चेदयुजौ सतः पङ्क्तिः ३८ विपरीतौ च ३९ प्रस्तारपङ्क्तिः पुरतः ४० आस्तारपङ्क्तिः परतः ४१ विष्टारपङ्क्तिरन्तः ४२ संस्तारपङ्क्तिर्बहिः ४३ अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ४४ द्वावप्यल्पशः ४५ पदपङ्क्तिः पञ्च ४६ चतुष्कषट्कौ त्रयश्च ४७ पथ्या पञ्चभिर्गायत्रैः ४८ जगती षड्भिः ४९ एकेन त्रिष्टुब्ज्योतिष्मती ५० तथा जगती ५१ पुरस्ताज्ज्योतिः प्रथमेन ५२ मध्येज्योतिर्मध्यमेन ५३ उपरिष्टाज्ज्योतिरन्त्येन ५४ एकस्मिन्पञ्चके छन्दः शङ्कुमती ५५ षट्के ककुद्मती ५६ त्रिपादणिष्ठमध्या पिपीलिकमध्या ५७ विपरीता यवमध्या ५८ ऊनाधिकेनैकेन निचृद्भुरिजौ ५९ द्वाभ्यां विराट्स्वराजौ ६० आदितः संदिग्धे ६१ देवतादितश्च ६२ अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वेदेवा देवताः ६३ स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः ६४ सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णाः ६५ आग्निवेश्यकाश्यपगौतमाङ्गिरसभार्गवकौशिकवासिष्ठानि गोत्राणि ६६

इति तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

चतुःशतमुत्कृतिः १ चतुरश्चतुरस्त्यचेदुत्कृतेः २ तान्यभिसंव्याप्रेभ्यः कृतिः ३ प्रकृत्या चोपसर्गवर्जितः ४ धृत्यष्टिशक्वरीजगत्यः ५ पृथक्पृथक्पूर्वत एतान्येवैषाम् ६ द्वितीयं द्वितीयमतितः ७ अथ लौकिकम् ८ आत्रैष्टुभाच्च यदार्षम् ९ सुप्रतिष्ठाप्रतिष्ठामध्यात्युक्तोक्ताश्च १०-१ पादश्चतुर्भागः १०-२ यथावृत्तसमाप्तिर्वा ११ लः समुद्रा गणः १२ गौ गन्तमध्यादिर्लश्च १३ स्वरा अर्धं चार्यार्धम् १४ अत्रायुङ् न च् १५ षष्ठो च् १६ न्लौ वा १७ न्लौ चेत्पदं द्वितीयादि १८ सप्तमः प्रथमादि १९ अन्त्ये पञ्चमः २० षष्ठश्च ल् २१ त्रिषु गणेषु पादः पथ्याद्य च २२ विपुलान्या २३ चपला द्वितीयचतुर्थौ ग्मध्ये चौ २४ पूर्वे मुस्वपूर्वा २५ जघनपूर्वेतरत्र २६ उभयोर्महाचपला २७ आद्यार्धसमा गीतिः २८ अन्त्येनोपगीतिः २९ उत्क्रमेणोद्गीतिः ३० अर्धे वसुगण आर्यागीतिः ३१ वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते र्ल्गाः ३२ गौपच्छन्दसकम् ३३ आपातलिका भ्गौ ग् ३४ शेषे परेण युङ् न साकम् ३५ षट् चामिश्रा युजि ३६ पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ३७ अयुक्तृतीयेनोदीच्यवृत्तिः ३८ आभ्यां युगपत्प्रवृत्तकम् ३९ अयुक्चारुहासिनी

४० युगपरान्तिका ४१ गन्ता द्विर्वसवो मात्रासमकं ल् नवमः ४२ द्वादशश्च वानवासिका ४३ विश्लोकः पञ्चमाष्टमौ ४४ चित्रा नवमश्च ४५ परयुक्ते-नोपचित्रा ४६ एभिः पादाकुलकम् ४७ गीत्यार्या लः ४८ शिखा विपय-स्तार्धा ४९ लः पूर्वश्चेज्ज्योतिः ५० गश्चेत्सौम्या ५१ चूलिकैकोनत्रिंश-देकत्रिंशदन्ते ग् ५२ सा ग् येन न समा लां ग्ल इति ५३

इति चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः

वृत्तम् १ सममर्धसमं विषमं च २ समं तावत्कृत्वः कृतमर्धसमम् ३ विषमं च ४ समसमार्द्धसमोपचितम् ५-१ राश्यूनम् ५-२ ग्लिति समानी ६ ल्गिति प्रमाणी ७ वितानमन्यत् ८ पादस्यानुष्टुब्वक्त्रम् ९ न प्रथमात्स्नौ १० द्वितीयचतुर्थयो रश्च ११ वान्यत् १२ य चतुर्थात् १३ पथ्या युजो ज् १४ विपरीतैकीयम् १५ चपलायुजो न् १६ विपुला युग्लः सप्तमः १७ सर्वतः सैतवस्य १८ भ्रौ न्तौ च १९ प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम् २० गावन्त आपीडः २१ गावादौ चेत्प्रत्यापीडः २२ प्रत्यापीडो गावादौ च २३ प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधाराः २४ उद्गतामेकतः स्जौ स्लौ न्सौ ज्गौ भ्गौ ज्लौ ग् स्जौ स्जौ ग् २५ तृतीयस्य सौरभकं र्नौ भ्गौ २६ ललितं नौ सौ २७ उपस्थितप्रचुषितं पृथगाद्यं म्सौ ज्भौ गौ स्नौ ज्रौ ग् नौ स् नौ न् ज्यौ २८ वर्द्धमानं नौ स्नौ न्सौ २९ शुद्धविराड्षभं त्ज्राः ३० अर्द्धे ३१ उपचित्रकं सौ स्लौ ग् भौ भ्गौ ग् ३२ द्रुतमध्या भौ भ्गौ ग् न्जौ ज्यौ ३३ वेदवती सौ स्गौ भौ भ्गौ ग् ३४ भद्रविराट् त्जौ र्गौ म्सौ ज्गौ ग् ३५ केतुमती स्जौ स्गौ भ्रौ न्गौ ग् ३६ आख्यानकी तौ ज्गौ ग् ज्तौ ज्गौ ग् ३७ विपरीताख्यानकी ज्तौ ज्गौ ग् तौ ज्गौ ग् ३८ हरिणप्लुता सौ स्लौ ग् न्भौ भ्रौ ३९ अपरवक्त्रं नौ र्लौ ग् न्जौ ज्रौ ४० पुष्पिताग्रा नौ र्यौ न्जौ ज्रौ ग् ४१ यवमती र्जौ र्जौ ज्रौ ज्रौ ग् ४२ शिखैकोनत्रिंशदेकत्रिंशदन्ते ग् ४३ खञ्जा महत्ययुजीति ४४

इति पञ्चमोऽध्यायः

अथ षष्टोऽध्यायः

यतिर्विच्छेदः १ गः श्री २ गौस्त्री ३ मो नारी ४ ग्मौ चेत् कन्या ५

पङ्क्तिर्भगौ ग् ६ तनुमध्या त्यौ ७ कुमारललिता ज्सौ ग् ८ माणवका- क्रीडितकं भ्तौ ल्गौ ९ चित्रपदा भौ गौ १० विद्युन्माला मौ गौ ११ भुजगशिशुसृता नौ म् १२ हलमुखी र्नौ स् १३ शुद्धविराड् म्सौ ज्गौ १४ पणवो म्नौ य्गौ १५ रुक्मवती भ्मौ स्गौ १६ मयूरसारिणी र्जौ र्गौ १७ मत्ता म्भौ स्गौ १८ उपस्थिता त्जौ ज्गौ १९ इन्द्रवज्रा तौ ज्गौ ग् २० उपेन्द्रवज्रा ज्तौ ज्गौ ग् २१ आद्यन्तावुपजातयः २२ दोधकं भौ भ्गौ ग् २३ शालिनी म्तौ त्गौ ग् समुद्रऋषयः २४ वातोर्मी म्भौ त्गौ ग् च २५ भ्रमरविलसितं म्भौ न्लौ ग् २६ रथोद्धता र्नौ र्लौ ग् २७ स्वागता र्नौ भ्गौ ग् २८ वृन्ता नौ स्गौ ग् २९ श्येनी र्जौ र्लौ ग् ३० विलासिनी ज्रौ ज्गौ ग् ३१ जगती ३२ वंशस्था ज्तौ ज्रौ ३३ इन्द्रवंशा तौ ज्रौ ३४ द्रुतविलम्बितं न्भौ भ्रौ ३५ तोटकं सः ३६ पुटो नौ म्यौ वसुसमुद्राः ३७ जलोद्धतगतिर्ज्सौ ज्सौ रसर्तवः ३८ ततं नौ म्रौ ३९ कुसुमविचित्रा न्यौ न्यौ ४० चञ्चलाक्षिका नौ रौ ४१ भुजङ्गप्रयातं यः ४२ स्रग्विणी रः ४३ प्रमिताक्षरा स्जौ सौ ४४ कान्तोत्पीडा भ्मौ स्मौ ४५ वैश्वदेवी मौ याविन्द्रियऋषयः ४६ वाहिनी त्यौ म्यावृषिकामशराः ४७ नवमालिनी न्जौ भ्याविति ४८

इति षष्टोऽध्यायः

अथ सप्तमोऽध्यायः

प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ १ रुचिरा ज्भौ स्जौ ग् चतुर्नवकौ २ मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ ३ गौरी नौ न्सौ ग् ४ असंबाधा म्तौ न्सौ गाविन्द्रियनवकौ ५ अपराजिता नौ र्सौ ल्गौ स्वरऋषयः ६ प्रहरणकलिता नौ भ्नौ ल्गौ च ७ वसन्ततिलका त्भौ जौ गौ ८ सिंहोन्नता काश्यपस्य ९ उद्धर्षिणी सैतवस्य १० चन्द्रावर्ता नौ नौ ग् ११ मालर्तूनवकौ चेत् १२ मणिगुणनिकरो वस्वृषयः १३ मालिनी नौ म्यौ य् १४ ऋषभगज- विलसितं भ्रौ नौ न्गौ स्वरनवकौ १५ हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः १६ पृथ्वी ज्सौ ज्सौ यलौ ग् वसुनवकौ १७ वंशपत्रपतितं भ्रौ न्भौ न्लौ ग् दिगृषयः १८ मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः १९ शिखरिणी य्मौ न्सौ भ्लौ गृतुरुद्राः २० कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रि- यर्तुस्वराः २१ शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः २२ सुवदना

म्रौ भ्नौ य्भौ ल्गावृषिस्वरर्तवः २३ ग्लिति वृत्तम् २४ स्रग्धरा म्रौ भ्नौ यौ य् त्रिःसप्तकाः २५ भद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः २६ अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग् रुद्रादित्याः २७ मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ २८ तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः २९ क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः ३० भुचङ्गविजृम्भितं मौ त्नौ नौ र्सौ ल्गौ वसुरुद्रऋृषयः ३१ अपवाहको म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ३२ दण्डको नौ रः ३३ प्रथमश्चण्डवृष्टिप्रपातः ३४ अन्यत्र रातमाण्डव्याभ्याम् ३५ शेषः प्रचित इति ३६

इति सप्तमोऽध्यायः

अथ अष्टमोऽध्यायः

अत्रानुक्तं गाथा १ कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः २ वरतनुर्न्जौ ज्रौ षड्रसाः ३ जलधरमाला म्भौ स्मौ समुद्रवसवः ४ गौरी नौ रौ ५ ललना भ्तौ न्साविन्द्रियर्षयः ६ कनकप्रभा स्जौ स्जौ ग् ७ कुटिलगतिर्नौ तौ ग् स्वरर्तवः ८ वरसुन्दरी भ्जौ स्नौ गौ ९ कुटिला म्भौ न्यौ गौ वेदरसस-मुद्राः १० शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाणि ११ वरयुवती भ्रौ य्नौ न्गौ १२ अतिशायिनी सौ ज्भौ ज्गौ ग् दिक्स्वराः १३ अवितथं न्जौ भ्जौ ज्लौ ग् १४ वस्विन्द्रियसमुद्राश्चेत्कोकिलकम् १५ विबुधप्रिया र्सौ जौ भ्रौ वसुदिशः १६ नाराचकं नौ रौ रौ १७ विस्मिता य्मौ न्सौ रौ ग् रसर्तुस्वराः १८ शशिवदना न्जौ भ्जौ ज् ज्रौ रुद्रदिशः १९ द्विकौ ग्लौ २० मिश्रौ च २१ पृथग्लौ मिश्राः २२ वसवस्त्रिकाः २३ लर्द्धे २४ सैके ग् २५ प्रतिलोमगुणं द्विर्लाद्यम् २६ ततोऽप्येकं जह्यात् २७ द्विरर्द्धे २८ रूपे शून्यम् २९ द्विः शून्ये ३० तावदर्धे तद्गुणितम् ३१ द्विर्द्यूनं तदन्तानाम् ३२ एकोनेऽध्वा ३३ परे पूर्णम् ३४ परे पूर्णमिति ३५

इत्यष्टमोऽध्यः ।

समाप्तश्चायं ग्रन्थः ।

अथ परिशिष्टम्

ऋृतुमात्रष्टः १ पञ्चमात्रष्ठः २ चतुर्मात्रो डः ३ त्रिमात्रो ढः ४ द्विमात्रो

णः ५ आर्य्याभेदान्तर्गता उद्गीतिर्विगाथा ६ उपगीतिर्गाहुः ७ गीतिरुद्गाथा ८ यत्र द्वादशाष्टादशमात्रं प्रथमार्द्धं द्वादशविंशतिमात्रं द्वितीयार्द्धं सा गाहिनी ९ विपरीता सिंहिनी १० द्वादशविंशतिमात्राभिः स्कन्धकार्द्धम् ११ टड-ढाष्टडला दोहार्द्धम् १२ रुद्रमात्राभिः षट्पदी रसिका १३ एकादशत्रयो-दशयतिकचतुर्विंशतिमात्रा चतश्चरणा चतुष्पदी रोला १४ यमकितसप्तदशा-क्षराष्टादशाक्षरपादाभ्यां गन्धानार्द्धम् १५ सगैः सप्तडकारैश्चतुष्पदी १६ सम्पू-र्णैश्चतुष्पद्यन्या चतुष्पदी १७ सप्तडकारान्ते वलयं दशाष्टत्रयोदशयतिकमित्थं द्विपदी धत्ता १८ टडत्रयठडद्वयैरेकत्रिंशत्कलः एकादशसप्तत्रयोदशयतिकः इत्थं द्विपदो धत्तानन्दः १९ यत्र द्वौ टकारौ स ज विप्रान्यतमडत्रयमध्यौ रुद्रत्रयोदशयतिकौ इत्थं चतुष्पदं काव्यम् २० डत्रय ढटडढैर्वसुपक्षमात्रा-कैश्चतुष्पदमुल्लालम् २१ काव्यपादचतुष्टयोल्लालद्विपदैः षट्पदी २२ जान्तडचतुष्टयचतुष्पदी पज्झटिका २३ सैव भान्ताडिल्ला प्रथमद्वितीययो-स्तृतीयचतुर्थयोश्च यमकिता २४ डवतुष्टयपूर्ववत् यमकितपादाकुलकम् २५ षोडशचतुर्दशमात्राभिश्चौयालार्द्धम् २६ यत्र ढड द्वयजकारैः प्रथमः पादः लद्वयान्त्यडत्रयेण द्वितीयः ढडत्रयेण तृतीयः ढडद्वयेन चतुर्थः तृतीयवत्पञ्चम पदपञ्चकान्ते दोहापादचतुष्टयमित्थं नवपदी रड्डा २७ अजवसुडैश्चतुष्पदी पद्मावती २८ यत्र दोहाचरणचतुष्टयेन पूर्वार्द्धं काव्यचरणचतुष्टयेनोत्तरार्द्धं दोहाशेषचरणकाव्याद्यचरणैकदेशाभ्यां काव्यद्वितीयतृतीयपादाद्ययतिभ्याञ्च यमकयुक्तं सा कुण्डलिका २९ टडचतुष्टयढैरर्कत्रयोदशयतिकैश्चतुष्पदं गग-नाङ्गनम् ३० टड पञ्चकगैर्द्विपदी ३१ दशदशसप्तदशयतिकमुनिवह्निमा-त्राकद्विपदमुल्लणम् ३२ डनवकराभ्यां द्विपदी खञ्जा ३३ यत्र ड षट्कजाभ्यां डसप्तकजाभ्याञ्च पूर्वोत्तरार्द्धं सा शिखा ३४ यत्र ड नवकरेफकर्णैः पूर्वार्द्धमा-र्य्योत्तरार्द्धञ्च सा माला ३५ कुसुमान्तदोहापूर्वोत्तरार्द्धाभ्यां चुलियाला ३६ टडलैष्टढभैः सौरठार्द्धम् ३७ यत्र विप्रसभान्यतरडत्रयगैरेकादशाक्षरैः प्रथम-द्वितीयपादौ सभान्यतरडत्रयगैर्दशाक्षरैश्च तृतीय चतुर्थौ पादौ सा हाकलिः ३८ डजाभ्यां चतुष्पदो मधुभारः ३९ डत्रयटडत्रयगैश्चतुष्पदी दण्डकला ४० जान्तैकादशमात्राभिश्चतुष्पद आभीरः ४१ डचतुष्टयटडद्वयगैः षोडशमात्राय-तिकैश्चतुष्पदी कामकला ४२ अज डसप्तकगैरुचिरार्द्धम् ४३ ड लद्वयजैश्च-तुष्पदं दीपकम् ४४ सद्विजान्यतरडैश्चतुर्भिश्चतुष्पदं सिंहावलोकितम् ४५ गादि ट ठ ड जगैश्चतुष्पदः प्लवङ्गमः ४६ डाष्टकैश्चतुष्पदी लीलावती ४७

ठटठत्रय गैरष्टाविंशतिमात्रकं हरिगीतम् ४८ तद्वयान्तनियतन्तद्धरगीतम् ४९ नवसप्तद्वादशयतिकञ्चेद्धरिगीता ५० अजाष्टडैर्दशवसुवसुऋतुयतिकैश्चतुष्पदीत्रिभङ्गी ५१ दशाष्टचतुर्दशयतिकैर्वसुडैश्चतुष्पदी दर्मिलका ५२ यमकितगादिटत्रयराभ्यां प्रथमद्वितीययोस्तृतीयचतुर्थयोश्चान्त्ययमकितश्चतुष्पदो हीरः ५३ सप्तद्विज सैर्दशवसुवसुऋतुयतिकैश्चतुष्पदं जनहरणम् ५४ लद्वयड नवकगैर्दशवसुचतुर्दश वसुयतिकैश्चतुष्पदं मदनगृहम् ५५ टड पञ्चककगलैर्दशवस्वेकादशयतिकैश्चतुष्पदं महाराष्ट्रम् ५६ भसप्तकगाभ्यां चतुष्पदी मदिरा ५७ सैव गान्ता मालती ५८ साष्टकगाभ्यां चतुष्पदी मल्ली ५९ जसप्तकलगैश्चतुष्पदी मल्लिका ६० सैव गान्ता माधवी ६१ डाष्टकचतुष्पदी मागधी ६२ ठद्वयडद्वयलगैश्चतुष्पदं गलितकम् ६३ ठद्वयडद्वयठैश्चतुष्पदं विगलितकम् ६४ डद्वयठाभ्यां चतुष्पदं सङ्गलितकम् ६५ ठद्वयलगैः सुन्दरगलितकम् ६६ ठद्वयढद्वयाभ्यां भूषणगलितकम् ६७ टढचतुष्टयगैर्मुखगलितकम् ६८ टगान्त ड चतुष्टयाभ्यां विलम्बितगलितकम् ६९ डठद्वयडद्वयलगैः समगलितकम् ७० यत्र डढाभ्यामयुग्मौ टढ चतुष्टयठगैर्युग्मौ पादौ इत्थं चतुष्पदमपरं सङ्कलितकम् ७१ अजडपञ्चकगाभ्यां चतुष्पदमपरं विलम्बितगलितकम् ७२ ठडठडठगैश्चतुष्पदं विच्छिप्तिकगलितकम् ७३ ड ठ ड ठड गैर्ललितागलितकम् ७४ यत्र ठडठ डकमलैः प्रथमद्वितीयपादौ ठत्रयड सूर्यैश्च तृतीयचतुर्थौ तद्विषमितागलितकम् ७५ टविषमजडदशकचतुष्पदं मालागलितकम् ७६ इदमेव डद्वयहीनञ्चेन्मुग्धमालागलितकम् ७७ तदापि डद्वयन्यूनञ्चेदुद्गलितकम् ७८

इति परिशिष्टम्